# अथ श्री सूर्य सहस्रनाम स्तोत्रम्

## ध्यानम्

ध्येयस्सदासवितृमण्डलमध्यवर्ती
नारायणस्सरसिजासनसंनिविष्टः
केयूरवान् मकरकुण्डलवान् गिरीती
हारी हिरण्मयवपुर्धृतशङ्खचक्रः

विश्वजिद्विश्वजित्कर्ता विश्वात्मा विश्वतोमुखः
विश्वेश्वरो विश्वयोनिर्नियतात्मा जितेन्द्रियः १
कालाश्रयः कालकर्ता कालहा कालनाशनः
महायोगी महाबुद्धिर्महात्मा सुमहाबलः २
प्रभुर्विभुर्भूतनाथो भूतात्मा भुवनेश्वरः
भूतभव्यो भावितात्मा भूतान्तःकरणः शिवः ३
शरण्यः कमलानन्दो नन्दनो नन्दवर्धनः
वरेण्यो वरदो योगी सुसंयुक्तः प्रकाशकः ४
वाक्प्राणः परमः प्राणः प्रीतात्मा प्रियतः प्रियः
नयः सहस्रपात्साधुर्दिव्यकुण्डलमण्डितः ५
अव्यङ्गधारी धीरात्मा प्रचेता वायुवाहनः
समाहितमतिर्धाता विधाता कृतमङ्गलः ६
कपर्दी कल्पकृद्रुद्रः सुमनाधर्मवत्सलः
समायुक्तो विमुक्तात्मा कृतात्मा कृतिनांवरः ७
अविचिन्त्यवपुः श्रेष्ठो महायोगी महेश्वरः
कान्तः कामादिरादित्यो नियतात्मा निराकुलः ८

कामः कारुणिकः कर्ता कमलाकरबोधनः
सप्तसप्तिरचिन्त्यात्मा महाकारुणिकोत्तमः ९
संजीवनो जीवनाथो जगज्जीवो जगत्पतिः
अजयो विश्वनिलयः संविभागो वृषध्वजः १०
वृषाकपिः कल्पकर्ता कल्पान्तकरणो रविः
एकचक्ररथो मौनी सुरथो रथिनांवरः ११
अक्रोधनो रश्मिमाली तेजोराशिर्विभावसुः
दिव्यकृद्दिनकृद्देवो देवदेवो दिवस्पतिः १२
धीरानाथो हविर्होता दिव्यबाहुर्दिवाकरः
यज्ञो यज्ञपतिः पूषा स्वर्णरेताः परावहः १३
परापरज्ञस्तरणिरंशुमाली मनोहरः
प्राज्ञः प्रजापतिः सूर्यः सविता विष्णुरंशुमान् १४
सदागतिर्गन्धबाहुर्विहितो विधिराशुगः
पतङ्गः पतगः स्थाणुर्विहंगो विहगो वरः १५
हर्यश्वो हरिताश्वश्च हरिदश्वो जगत्प्रियः
त्र्यंबकः सर्वदमनो भावितात्मा भिषग्वरः १६
आलोककृल्लोकनाथो लोकालोकनमस्कृतः
कालः कल्पान्तको वह्निस्तपनः सम्प्रतापनः १७
विरोचनो विरूपाक्षः सहस्राक्षः पुरंदरः
सहस्ररश्मिर्मिहिरो विविधाम्बरभूषणः १८
खगः प्रतर्दनो धन्यो हयगो वाग्विशारदः
श्रीमांश्च शिशिरो वाग्मी श्रीपतिः श्रीनिकेतनः १९

श्रीकरगठः श्रीधरः श्रीमान् श्रीनिवासो वसुप्रदः
कामचारो महामायो महेशो विदिताशयः २०
तीर्थक्रियावान् सुनयो विभवो भक्तवत्सलः
कीर्तिः कीर्तिकरो नित्यः कुगडली कवची रथी २१
हिरगयरेताः सप्ताश्वः प्रयतात्मा परंतपः
बुद्धिमानमरश्रेष्ठो रोचिष्णुः पातशासनः २२
समुद्रो धनदो धाता मान्धाता कश्मलापहः
तमोघ्नो ध्वान्तहा वह्निर्होतान्तःकरणो गुहः २३
पशुमान् प्रयतानन्दो भूतेशः श्रीमतांवरः
नित्योदितो नित्यरथः सुरेशः सुरपूजितः २४
अजितो विजयो जेता जङ्गमस्थावरात्मकः
जीवानन्दो नित्यकामी विजेता विजयप्रदः २५
पर्जन्योऽग्निः स्थितिस्थेयः स्थविरोऽणुर्निरञ्जनः
प्रद्योतनो रथारूढः सर्वलोकप्रकाशकः २६
ध्रुवो मेधी महावीर्यो हंसः संसारतारकः
सृष्टिकर्ता क्रियाहेतुर्मार्तगडो मरुतांपतिः २७
मरुत्वान् दहनः स्पष्टा भगो भाग्योऽर्यमापतिः
वरुणांशो जगन्नाथः कृतकृत्यः सुलोचनः २८
विवस्वान् भानुमान् कार्यकारणं तेजसांनिधिः
असङ्गवामी तिग्मांशुर्धर्मादिर्दीप्तदीधितिः २९
सहस्रदीधितिर्भघ्नः सहस्रांशुर्दिवाकरः
गभस्तिमान् दीधितिमान् स्रग्विमानतुलद्युतिः ३०

भास्करः सुरकार्यज्ञः सर्वज्ञस्तीक्ष्णदीधितिः
सुरज्येष्ठः सुरपतिर्बहुज्ञोवचसांपतिः ३१
तेजोनिधिर्बृहत्तेजा बृहत्कीर्तिर्बृहस्पतिः
अहिमानूर्जितो धीमान् आमुक्तः कीर्तिवर्धनः ३२
महावैद्याग्रेणपतिर्गणेशो गणनायकः
तीव्रप्रतापनस्तापी तापनो विश्वतापनः ३३
कार्तस्वरो हृषीकेशः पद्मानन्दोऽभिनन्दितः
पद्मनाभोऽमृताहारः स्थितिमान् केतुमान् नभः ३४
अनाद्यन्तोऽच्युतो विश्वो विश्वामित्रो घृणी विराट्
आमुक्तः कवची वाग्मी कञ्चुकी विश्वभावनः ३५
अनिमित्तगतिः श्रेष्ठः शरण्यः सर्वतोमुखः
विगाहीरेणुरसहः समायुक्तः समाहितः ३६
धर्मकेतुर्धर्मरतिः संहर्ता संयमोयमः
प्रणतार्तिहरो वादी सिद्धकार्यो जनेश्वरः ३७
नभो विगाहनः सत्यः स्थामसः सुमनो हरः
हारी हरिर्हरो वायुर्ऋतुः कालानलद्युतिः ३८
सुखसेव्यो महातेजा जगतामन्तकारणम्
महेन्द्रो विष्टुतः स्तोत्रं स्तुतिहेतुः प्रभाकरः ३९
सहस्त्रकल आयुष्मान् अरोषः सुखदः सुखी
व्याधिहा सुखदः सौख्यं कल्याणः कल्पिनांवरः ४०
आरोग्यकर्मणां सिद्धिर्वृद्धिर्ऋद्धिरहस्पतिः
हिरण्यरेता आरोग्यं विद्वान् बन्धुर्बुधो महान् ४१

प्रणवान् धृतिमान् धर्मो धर्मकर्ता रुचिप्रदः
सर्वप्रियः सर्वसहः सर्वशत्रुनिवारणः ४२
प्रांशुर्विद्योतनो द्योतः सहस्रकिरणः कृतिः
केयूरभूषणोद्भासी भासितो भासनोऽनलः ४३
शरण्यार्तिहरो होता खद्योतः खगसत्तमः
सर्वद्योतोऽमवद्द्योतः सर्वद्युतिकरोऽमलः ४४
कल्याणः कल्याणकरः कल्पः कल्पकरः कविः
कल्याणकृत्कल्पवपुः सर्वकल्याणभाजनः ४५
शान्तिप्रियः प्रसन्नात्मा प्रशान्तः प्रशमप्रियः
उदारकर्मा सुनयः सुवर्चा वर्चसोज्ज्वलः ४६
वर्चस्वी वर्चसामीशस्त्रैलोक्येशो वशानुगः
तेजस्वी सुयशावर्णिवर्णाध्यक्षो बलिप्रियः ४७
यशस्वी वेदनिलयस्तेजस्वी प्रकृतिस्थितः
आकाशगः शीघ्रगतिराशुगः श्रुतिमान् खगः ४८
गोपतिर्ग्रहदेवेशो गोमानेकः प्रभञ्जनः
जनिताप्रजगण्डीवो दीपः सर्वप्रकाशकः ४९
कर्मसाक्षी योगनित्यो नभस्वान् असुरान्तकः
रक्षोघ्नो विघ्नशमनः किरीटी सुमनःप्रियः ५०
मरीचिमाली सुमतिः कृतातिथ्योऽविशेषतः
शिष्टाचारः शुभाकारः स्वाचारा चारतत्परः ५१
मन्दारो माठरो रेणुः क्षोभणः पक्षिणाङ्गुरुः
स्वविशिष्टो विशिष्टात्मा विधेयो ज्ञानशोभनः ५२

महाश्वेता प्रियो ज्ञेयः सामगो मोददायकः
सर्ववेदप्रगीतात्मा सर्ववेदो गयालयः ५३
वेदमूर्तिश्चतुर्वेदो वेदभृद्वेदपारगः
क्रियावानतिरोचिष्णुर्वरीयांश्च वरप्रदः ५४
व्रतधारी व्रतधरो लोकबन्धुरलंकृतः
अलंकाराक्षरो दिव्यविद्यावान् विदिताशयः ५५
अकारो भूषणो भूष्यो भूष्णुर्भवनपूजितः
चक्रपाणिर्वज्रधरः सुवेशो लोकवत्सलः ५६
राज्ञीपतिर्महाबाहुः प्रकृतिर्विकृतिर्गुणः
अन्धकारापहः श्रेष्ठो युगावर्तो युगादिकृत् ५७
अप्रमेयः सदायोगी निरहंकार ईश्वरः
शुभप्रदः शुभशोभा शुभकर्मा शुभास्पदः ५८
सत्यवान् धृतिमान् अर्च्यो ह्यकारो वृद्धिदोऽनलः
बलभृद्बलगो बन्धुर्बलवान् हरिणांवरः ५९
अनङ्गोऽनागराणिन्द्रः पद्मयोनिर्गणेश्वरः
संवत्सर ऋतुर्नेता कालचक्रप्रवर्तकः ६०
पद्मेक्षरः पद्मयोनिः प्रभवोऽनसरद्युतिः
सुमूर्तिः सुमतिः सोमो गोविन्दो जगदादिजः ६१
पीतवासाः कृष्णवासा दिग्वासातीन्द्रियो हरिः
अतीन्द्रोऽनेकरूपात्मा स्कन्दः परपुरंजयः ६२
शक्तिमान् सूरधृग्भास्वान् मोक्षहेतुरयोनिजः
सर्वदर्शोदितो दर्शो दुःस्वप्नाशुभनाशनः ६३

माङ्गल्यकर्ता करणिर्वेगवान् कश्मलापहः
स्पष्टाक्षरो महामन्त्रो विशाखो यजनप्रियः ६४
विश्वकर्मा महाशक्तिर्ज्योतिरीशविहंगमः
विचक्षणो दक्ष इन्द्रः प्रत्यूहः प्रियदर्शनः ६५
अश्विनौ वेदनिलयो वेदविद्विदिताशयः
प्रभाकरो जितरिपुः सुजनोऽरुणसारथिः ६६
कुबेरसुरथः स्कन्दो महितोऽभिहितो गुहुः
ग्रहराजो ग्रहपतिर्ग्रहनक्षत्रमण्डनः ६७
भास्करः सततानन्दो नन्दनो नन्दिवर्धनः
मङ्गलोऽप्यथ मङ्गलवान् माङ्गल्योऽमङ्गलापहः ६८
मङ्गलाचारचरितः शीर्णः सर्वव्रतो व्रती
चतुर्मुखः पद्ममाली पूतात्मा प्रणतार्तिहा ६९
अकिञ्चनः सत्यसन्धो निर्गुणो गुणवान् गुणी
सम्पूर्णः पुण्डरीकाक्षो विधेयो योगतत्परः ७०
सहस्रांशुः क्रतुपतिः सर्वस्वं सुमतिः सुवाक्
सुभामनो माल्यदामा घृताहारो हरिप्रियः ७१
ब्रह्मप्रचेता प्रथितः प्रतीतात्मा स्थिरात्मकः
शतबिन्दुः शतमखो गरीयान् अनलप्रभुः ७२
धीरो महत्तरो धन्यः पुरुषः पुरुषोत्तमः
विद्याधराधिराजोऽहिविद्यावान् भूतिदस्थितः ७३
अनिर्देश्यवपुः श्रीमान् विश्वात्मा बहुमङ्गलः
सुस्थितः सुरथः स्वर्णो मोक्षाधारनिकेतनः ७४

निर्द्वन्द्वो द्वन्द्वहा सर्गः सर्वगः सम्प्रकाशयः
दयालुः सूक्ष्मरीः शान्तिः क्षेमाक्षेमस्थितिप्रियः ७५
भूतरो भूपतिर्वक्ता पवित्रात्मा त्रिलोचनः
महावराहः प्रियकृद् धाता भोक्ताभयप्रदः ७६
चतुर्वेदधरो नित्यो विनिद्रो विविधाशनः
चक्रवर्ती धृतिकरः सम्पूर्णोऽथ महेश्वरः ७७
विचित्ररथ एकाकी सप्तसप्तिः परात्परः
सर्वोदधिस्थितिकरः स्थितिस्थेयः स्थितिप्रियः ७८
निष्कलः पुष्करनिभो वसुमान् वासवप्रियः
वसुमान् वासवस्वामी वसुराता वसुप्रदः ७९
बलवान् ज्ञानवांस्तत्त्वमोंकारस्तृषुसंस्थितः
संकल्पयोनिर्दिनकृद्भगवान् कारणावहः ८०
नीलकण्ठो धनाध्यक्षश्चतुर्वेदप्रियंवदः
वषट्कारो हुतं होता स्वाहाकारो हुताहुतिः ८१
जनार्दनो जनानन्दो नरो नारायणोऽम्बुदः
स्वर्णाङ्गक्षपणो वायुः सुरा सुरनमस्कृतः ८२
विग्रहो विमलो बिन्दुर्विशोको विमलद्युतिः
द्योतितो द्योतनो विद्वान् विविद्वान् वरदो बली ८३
धर्मयोनिर्महामोहो विष्णुभ्राता सनातनः
सावित्रीभावितो राजा विसृतो विघृणी विराट् ८४
सप्तार्चिः सप्ततुरगः सप्तलोकनमस्कृतः
सम्पन्नोऽथ जगन्नाथः सुमनाः शोभनप्रियः ८५

सर्वात्मा सर्वकृत्सृष्टिः सप्तिमान् सप्तमीप्रियः
सुमेधा माधवो मेध्यो मेधावी मधुसूदनः ८६
अङ्गिरा गतिकालज्ञो धूमकेतुसुकेतनः
सुखी सुखप्रदः सौख्यं कामी कान्तिप्रियो मुनिः ८७
संतापनः संतपन आतपी तपसांपतिः
उग्रश्रवा सहस्रोस्त्रः प्रियङ्कारो प्रियङ्करः ८८
प्रीतो विमन्युरम्भोदो जीवनो जगतांपतिः
जगत्पिता प्रीतमनाः सर्वः शर्वो गुहावलः ८९
सर्वगो जगदानन्दो जगन्नेता सुरारिहा
श्रेयः श्रेयस्करो ज्यायानुत्तमोत्तम उत्तमः ९०
उत्तमोऽथ महामेरुर्धारणो धरणीधरः
धाराधरो धर्मराजो धर्माधर्मप्रवर्तकः ९१
रथाध्यक्षो रथपतिस्त्वरमाणोऽमितानलः
उत्तरोऽनुत्तरस्तापी तारापतिरपांपतिः ९२
पुण्यसंकीर्तनः पुण्यो हेतुर्लोकत्रयाश्रयः
स्वर्भानुर्विहगारिष्टो विशिष्टोत्कृष्टकर्मकृत् ९३
व्याधिप्रणाशनः क्षेमः शूरः सर्वजिताम्बरः
एकनाथो रथाधीशः शनैश्चरपितासितः ९४
वैवस्वतगुरुर्मृत्युर्धर्मनित्यो महाव्रतः
प्रलम्बहारः संचारी प्रद्योतो द्योतितोऽनलः ९५
संतानकृत् परो मन्त्रो मन्त्रमूर्तिर्महाबलः
श्रेष्ठात्मा सुप्रियः शम्भुर्महतामीश्वरेश्वरः ९६

संसारगतिविच्छेता संसारार्णवतारकः
सप्तजिह्वः सहस्त्रार्ची रत्नगर्भोऽपराजितः ९७
धर्मकेतुरमेयात्मा धर्माधर्मवरप्रदः
लोकसाक्षी लोकगुरुर्लोकेशश्छन्दवाहनः ९८
धर्मरूपः सूक्ष्मवायुर्धनुष्पाणिर्धनुर्धरः
पिनाकधृन्महोत्साहो नैकमायो महाशनः ९९
वीरः शक्तिमतांश्रेष्ठः सर्वशस्त्रभृतांवरः
ज्ञानगम्यो दुराराध्यो लोहिताङ्गोऽरिमर्दनः १००
अनन्तो धर्मदो नित्यो धर्मकृच्चित्रिविक्रमः
दैवत्रस्त्र्यक्षरो मध्यो नीलाङ्गो नीललोहितः १०१
एकोऽनेकस्त्रयीव्यासः सविता समितिंजयः
शार्ङ्गधन्वानलो भीमः सर्वप्रहरणायुधः १०२
परमेष्ठी परंज्योतिर्नाकपाली दिवस्पतिः
वदान्यो वासुकिर्वैद्य आत्रेयोऽतिपराक्रमः १०३
द्वापरः परमोदारः परमब्रह्मचर्यवान्
उद्दीप्तवेषो मुकुटी पद्महस्तोऽहिमांशुभृत् १०४
स्मितः प्रसन्नवदनः पद्मोदरनिभाननः
सायंदिवा दिव्यवपुरनिर्देश्यो महारथः १०५
महारथो महानीशः शेषः सत्त्वरजस्तमः
धृतातपत्रः प्रतिमो विमर्शी निर्णयस्थितः १०६
अहिंसकः शुद्धमतिरद्वितीयो विमर्दनः
सर्वदो धनदो मोक्षो विहारी बहुदायकः १०७

ग्रहनाथो ग्रहपतिर्ग्रहेशस्तिमिरापहः
मनोहरवपुः शुभ्रः शोभनः सुप्रभाननः १०८
सुप्रभः सुप्रभाकारः सुनेत्रो निक्षुभापतिः
राज्ञीप्रियः शब्दकरो ग्रहेशस्तिमिरापहः १०९
सैंहिकेयरिपुर्देवो वरदो वरनायकः
चतुर्भुजो महायोगी योगीश्वरपतिस्तथा ११०
अनादिरूपोऽदितिजो रत्नकान्तिः प्रभामयः
जगत्प्रदीपो विस्तीर्णो महाविस्तीर्णमण्डलः १११
एकचक्ररथः स्वर्णरथः स्वर्णशरीरधृक्
निरालम्बो गगनगो धर्मकर्मप्रभावकृत् ११२
धर्मात्मा कर्मणांसाक्षी प्रत्यक्षः परमेश्वरः
मेरुसेवी सुमेधावी मेरुरक्षाकरो महान् ११३
आधारभूको रतिमांस्तथा च धनधान्यकृत्
पापसंतापसंहर्ता मनोवांछितदायकः ११४
लोकहर्ता राज्यदायी रमणीयगुणोऽनृणी
कालत्रयानन्तरूपो मुनिवृन्दनमस्कृतः ११५
संध्यारागकरः सिद्धः संध्यावन्दनवन्दितः
साम्राज्यदाननिरतः समाराधनतोषवान् ११६
भक्तदुःखक्षयकरो भवसागरतारकः
भयापहर्ता भगवान् अप्रमेयपराक्रमः ११७
मनुस्वामी मनुपतिर्मान्यो मन्वन्तराधिपः ११८

इति श्री भविष्ये महापुराणे सूर्यसहस्रनाम स्तोत्रं सम्पूर्णम्

॥ श्रीसूर्यसहस्रनामस्तोत्रम् १ ॥

सुमन्तुरुवाच
माघे मासि सिते पक्षे सप्तम्याङ्कुरुनन्दन ।
निराहारो रविम्भक्त्या पूजयेद्विधिना नृप ॥ १॥

पूर्वोक्तेन जपेज्जप्यन्देवस्य पुरतः स्थितः ।
शुद्धैकाग्रमना राजञ्जितक्रोधो जितेन्द्रियः ॥ २॥

शतानीक उवाच
केन मन्त्रेण जप्तेन दर्शनं भगवान्व्रजेत् ।
स्तोत्रेण वापि सविता तन्मे कथय सुव्रत ॥ ३॥

सुमन्तुरुवाच
स्तुतो नामसहस्रेण यदा भक्तिमता मया ।
तदा मे दर्शनं यातः साक्षाद् देवो दिवाकरः ॥ ४॥

शतानीक उवाच
नाम्नां सहस्रं सवितुः श्रोतुमिच्छामि ते द्विज ।
येन ते दर्शनं यातः साक्षाद् देवो दिवाकरः ॥ ५॥

सुमन्तुरुवाच
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।
extra line स्तोत्रमेतन्महापुण्यं सर्वोपद्रवनाशनम् ।
न चेदस्ति भयङ्किञ्चिद्यजनेन च शाम्यति ॥ ६॥

ज्वराद्विमुच्यते राजन् स्तोत्रेऽस्मिन्पठिते नरः ।
अन्ये च रोगाश्शाम्यन्ति पठतः शृण्वतस्तथा ॥ ७॥

सम्पद्यन्ते यथा कामास्सर्वभोगा यथेप्सिताः ।
य एतदादितः श्रुत्वा सङ्ग्रामं प्रविशेन्नरः ॥ ८॥

स जित्वा समरे शत्रूनभ्येति गृहमक्षतः ।
वन्ध्यानां पुत्रजननं भीतानां भयनाशनम् ॥ ९॥

भूतिकारि दरिद्राणां कुष्ठिनां परमौषधम् ।
बालानाञ्चैव सर्वेषाङ्ग्रहरक्षोनिवारणम् ॥ १०॥

पठेद् एतद्धि यो राजन् स श्रेयः परमाप्नुयात् ।
संसिद्धस्सर्वसङ्कल्पः सुखमत्यन्तमश्नुते ॥ ११॥

धर्मार्थिभिर्धर्मलुब्ध्यै सुखाय च सुखार्थिभिः ।
राज्याय राज्यकामैश्च पठितव्यमिदन्नरैः ॥ १२॥

विद्यावहं तु विप्राणां क्षत्रियाणां जयावहम् ।
पश्वावहं तु वैश्यानां शूद्राणां धर्मवर्धनम् ॥ १३॥

पठतां शृण्वतामेतद् भवतीति न संशयः ।
तच्छृणुष्व नृपश्रेष्ठ प्रयतात्मा ब्रवीमि ते ॥ १४॥

नाम्नां सहस्रविख्यातं देवदेवस्य भास्वतः ।
ॐ अस्य श्रीसूर्यसहस्रनाम्नाम्भगवान् पराशरऋषिरनुष्टुप्छन्दः
श्रीसूर्यो देवता सकलाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥

। अथ भविष्यपुराणान्तर्गत-सूर्यसहस्रनामस्तोत्रम् ।

ध्यानम्
ध्येयः सदा सवितृमण्डलमध्यवर्ती
    नारायणः सरसिजासनसंनिविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
    हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

ॐ विश्वजिद् विश्वजित्कर्ता विश्वात्मा विश्वतोमुखः ।
विश्वेश्वरो विश्वयोनिर्नियतात्मा जितेन्द्रियः ॥ १॥

कालाश्रयः कालकर्ता कालहा कालनाशनः ।
महायोगी महाबुद्धिर्महात्मा सुमहाबलः ॥ २॥

प्रभुर्विभुर्भूतनाथो भूतात्मा भुवनेश्वरः ।
भूतभव्यो भावितात्मा भूतान्तःकरणः शिवः ॥ ३॥

शरण्यः कमलानन्दो नन्दनो नन्दवर्धनः ।
वरेण्यो वरदो योगी सुसंयुक्तः प्रकाशकः ॥ ४॥

वाक्प्राणः परमः प्राणः प्रीतात्मा प्रियतः प्रियः ।
नयः सहस्रपात् साधुर्दिव्यकुण्डलमण्डितः ॥ ५॥

अव्यङ्गधारी धीरात्मा प्रचेता वायुवाहनः ।
समाहितमतिर्धाता विधाता कृतमङ्गलः ॥ ६॥

कपर्दी कल्पकृद्रुद्रः सुमना धर्मवत्सलः ।
समायुक्तो विमुक्तात्मा कृतात्मा कृतिनांवरः ॥ ७॥

अविचिन्त्यवपुः श्रेष्ठो महायोगी महेश्वरः ।
कान्तः कामादिरादित्यो नियतात्मा निराकुलः ॥ ८॥

कामः कारुणिकः कर्ता कमलाकरबोधनः ।
सप्तसप्तिरचिन्त्यात्मा महाकारुणिकोत्तमः ॥ ९॥

संजीवनो जीवनाथो जगज्जीवो जगत्पतिः ।
अजयो विश्वनिलयः संविभागो वृषध्वजः ॥ १०॥

वृषाकपिः कल्पकर्ता कल्पान्तकरणो रविः ।
एकचक्ररथो मौनी सुरथो रथिनांवरः ॥ ११॥

अक्रोधनो रश्मिमाली तेजोराशिर्विभावसुः ।
दिव्यकृद् दिनकृद् देवो देवदेवो दिवस्पतिः ॥ १२॥

धीरानाथो हविर्होता दिव्यबाहुर्दिवाकरः ।
यज्ञो यज्ञपतिः पूषा स्वर्णरेताः परावहः ॥ १३॥

परापरज्ञस् तरणिरंशुमाली मनोहरः ।
प्राज्ञः प्रजापतिः सूर्यः सविता विष्णुरंशुमान् ॥ १४॥

सदागतिर्गन्धबाहुर्विहितो विधिराशुगः ।
पतङ्गः पतगः स्थाणुर्विहङ्गो विहगो वरः ॥ १५॥

हर्यश्वो हरिताश्वश्च हरिदश्वो जगत्प्रियः ।
त्र्यंबकः सर्वदमनो भावितात्मा भिषग्वरः ॥ १६॥

आलोककृल्लोकनाथो लोकालोकनमस्कृतः ।
कालः कल्पान्तको वह्निस्तपनः सम्प्रतापनः ॥ १७॥

विरोचनो विरूपाक्षः सहस्राक्षः पुरंदरः ।

सहस्ररश्मिर्मिहिरो विविधाम्बरभूषणः ॥ १८॥

खगः प्रतर्दनो धन्यो हयगो वाग्विशारदः ।
श्रीमांश्च शिशिरो वाग्मी श्रीपतिः श्रीनिकेतनः ॥ १९॥

श्रीकण्ठः श्रीधरः श्रीमान् श्रीनिवासो वसुप्रदः ।
कामचारो महामायो महेशो विदिताशयः ॥ २०॥

तीर्थक्रियावान् सुनयो विभवो भक्तवत्सलः ।
कीर्तिः कीर्तिकरो नित्यः कुण्डली कवची रथी ॥ २१॥

हिरण्यरेताः सप्ताश्वः प्रयतात्मा परंतपः ।
बुद्धिमान् अमरश्रेष्ठो रोचिष्णुः पातशासनः ॥ २२॥

समुद्रो धनदो धाता मान्धाता कश्मलापहः ।
तमोघ्नो ध्वान्तहा वह्निर्होतान्तःकरणो गुहः ॥ २३॥

पशुमान् प्रयतानन्दो भूतेशः श्रीमतांवरः ।
नित्योदितो नित्यरथः सुरेशः सुरपूजितः ॥ २४॥

अजितो विजयो जेता जङ्गमस्थावरात्मकः ।
जीवानन्दो नित्यकामी विजेता विजयप्रदः ॥ २५॥

पर्जन्योऽग्निः स्थितिस्थेयः स्थविरोऽणुर्निरञ्जनः ।
प्रद्योतनो रथारूढः सर्वलोकप्रकाशकः ॥ २६॥

ध्रुवो मेधी महावीर्यो हंसः संसारतारकः ।
सृष्टिकर्ता क्रियाहेतुर्मार्तण्डो मरुतांपतिः ॥ २७॥

मरुत्वान् दहनः स्पष्टा भगो भाग्योऽर्यमापतिः ।
वरुणांशो जगन्नाथः कृतकृत्यः सुलोचनः ॥ २८॥

विवस्वान् भानुमान् कार्यकारणं तेजसांनिधिः ।
असङ्गवामी तिग्मांशुर्धर्मादिर्दीप्तदीधितिः ॥ २९॥

सहस्रदीधितिर्भघ्नः सहस्रांशुर्दिवाकरः ।
गभस्तिमान् दीधितिमान् स्रग्विमान् अतुलद्युतिः ॥ ३०॥

भास्करः सुरकार्यज्ञः सर्वज्ञस् तीक्ष्णदीधितिः ।
सुरज्येष्ठः सुरपतिर्बहुज्ञोवचसांपतिः ॥ ३१॥

तेजोनिधिर्बृहत्तेजा बृहत्कीर्तिर्बृहस्पतिः ।
अहिमानूर्जितो धीमान् आमुक्तः कीर्तिवर्धनः ॥ ३२॥

महावैद्यागेणपतिर्गणेशो गणनायकः ।
तीव्रप्रतापनस् तापी तापनो विश्वतापनः ॥ ३३॥

कार्तस्वरो हृषीकेशः पद्मानन्दोऽभिनन्दितः ।
पद्मनाभोऽमृताहारः स्थितिमान् केतुमान् नभः ॥ ३४॥

अनाद्यन्तोऽच्युतो विश्वो विश्वामित्रो घृणी विराट् ।
आमुक्तः कवची वाग्मी कञ्चुकी विश्वभावनः ॥ ३५॥

अनिमित्तगतिः श्रेष्ठः शरण्यः सर्वतोमुखः ।
विगाहीरेणुरसहः समायुक्तः समाहितः ॥ ३६॥

धर्मकेतुर्धर्मरतिः संहर्ता संयमोयमः ।
प्रणतार्तिहरो वादी सिद्धकार्यो जनेश्वरः ॥ ३७॥

नभो विगाहनः सत्यः स्थामसः सुमनो हरः ।
हारी हरिर्हरो वायुरृतुः कालानलद्युतिः ॥ ३८॥

सुखसेव्यो महातेजा जगतामन्तकारणम् ।
महेन्द्रो विष्टुतः स्तोत्रं स्तुतिहेतुः प्रभाकरः ॥ ३९॥

सहस्रकल आयुष्मान् अरोषः सुखदः सुखी ।
व्याधिहा सुखदः सौख्यं कल्याणः कल्पिनांवरः ॥ ४०॥

आरोग्यकर्मणां सिद्धिर्वृद्धिरृद्धिरहस्पतिः ।
हिरण्यरेता आरोग्यं विद्वान् बन्धुर्बुधो महान् ॥ ४१॥

प्रणवान् धृतिमान् धर्मो धर्मकर्ता रुचिप्रदः । var घर्मो घर्मकर्ता
सर्वप्रियः सर्वसहः सर्वशत्रुनिवारणः ॥ ४२॥ var सर्वशत्रुविनाशनः

प्रांशुर्विद्योतनो द्योतः सहस्रकिरणः कृतिः ।
केयूरभूषणोद्भासी भासितो भासनोऽनलः ॥ ४३॥

शरण्यार्तिहरो होता खद्योतः खगसत्तमः ।
सर्वद्योतोऽमवद्द्योतः सर्वद्युतिकरोऽमलः ॥ ४४॥

कल्याणः कल्याणकरः कल्पः कल्पकरः कविः ।
कल्याणकृत् कल्पवपुः सर्वकल्याणभाजनः ॥ ४५॥

शान्तिप्रियः प्रसन्नात्मा प्रशान्तः प्रशमप्रियः ।
उदारकर्मा सुनयः सुवर्चा वर्चसोज्ज्वलः ॥ ४६॥

वर्चस्वी वर्चसामीशस् त्रैलोक्येशो वशानुगः ।
तेजस्वी सुयशावर्णिर्वर्णाध्यक्षो बलिप्रियः ॥ ४७॥

यशस्वी वेदनिलयस् तेजस्वी प्रकृतिस्थितः ।
आकाशगः शीघ्रगतिराशुगः श्रुतिमान् खगः ॥ ४८॥

गोपतिर्ग्रहदेवेशो गोमान् एकः प्रभञ्जनः ।
जनिताप्रजगण्डीवो दीपः सर्वप्रकाशकः ॥ ४९॥

कर्मसाक्षी योगनित्यो नभस्वान् असुरान्तकः ।
रक्षोघ्नो विघ्नशमनः किरीटी सुमनःप्रियः ॥ ५०॥

मरीचिमाली सुमतिः कृतातिथ्योऽविशेषतः ।
शिष्टाचारः शुभाकारः स्वाचारा चारतत्परः ॥ ५१॥

मन्दारो माठरो रेणुः क्षोभणः पक्षिणाङ्गुरुः ।
स्वविशिष्टो विशिष्टात्मा विधेयो ज्ञानशोभनः ॥ ५२॥

महाश्वेता प्रियो ज्ञेयः सामगो मोददायकः ।
सर्ववेदप्रगीतात्मा सर्ववेदो गयालयः ॥ ५३॥

वेदमूर्तिश्चतुर्वेदो वेदभृद् वेदपारगः ।
क्रियावान् अतिरोचिष्णुर्वरीयांश्च वरप्रदः ॥ ५४॥

व्रतधारी व्रतधरो लोकबन्धुरलंकृतः ।
अलंकाराक्षरो दिव्यविद्यावान् विदिताशयः ॥ ५५॥

अकारो भूषणो भूष्यो भूष्णुर्भवनपूजितः ।

चक्रपाणिर्वज्रधरः सुवेशो लोकवत्सलः ॥ ५६॥

राज्ञीपतिर्महाबाहुः प्रकृतिर्विकृतिर्गुणः ।
अन्धकारापहः श्रेष्ठो युगावर्तो युगादिकृत् ॥ ५७॥

अप्रमेयः सदायोगी निरहंकार ईश्वरः ।
शुभप्रदः शुभशोभा शुभकर्मा शुभास्पदः ॥ ५८॥

सत्यवान् धृतिमान् अच्यो ह्यकारो वृद्धिदोऽनलः ।
बलभृद् बलगो बन्धुर्बलवान् हरिणांवरः ॥ ५९॥

अनङ्गोऽनागराणिन्द्रः पद्मयोनिर्गणेश्वरः ।
संवत्सर ऋतुर्नेता कालचक्रप्रवर्तकः ॥ ६०॥

पद्मेक्षरः पद्मयोनिः प्रभवोऽनसरद्युतिः ।
सुमूर्तिः सुमतिः सोमो गोविन्दो जगदादिजः ॥ ६१॥

पीतवासाः कृष्णवासा दिग्वासातीन्द्रियो हरिः ।
अतीन्द्रोऽनेकरूपात्मा स्कन्दः परपुरंजयः ॥ ६२॥

शक्तिमान् सूरधृग् भास्वान् मोक्षहेतुरयोनिजः ।
सर्वदर्शोदितो दर्शो दुःस्वप्नाशुभनाशनः ॥ ६३॥

माङ्गल्यकर्ता करणिर्वेगवान् कश्मलापहः ।
स्पष्टाक्षरो महामन्त्रो विशाखो यजनप्रियः ॥ ६४॥

विश्वकर्मा महाशक्तिर्ज्योतिरीशविहंगमः ।
विचक्षणो दक्ष इन्द्रः प्रत्यूहः प्रियदर्शनः ॥ ६५॥

अश्विनौ वेदनिलयो वेदविद् विदिताशयः ।
प्रभाकरो जितरिपुः सुजनोऽरुणसारथिः ॥ ६६॥

कुबेरसुरथः स्कन्दो महितोऽभिहितो गुहः ।
ग्रहराजो ग्रहपतिर्ग्रहनक्षत्रमण्डनः ॥ ६७॥

भास्करः सततानन्दो नन्दनो नन्दिवर्धनः ।
मङ्गलोऽप्यथ मङ्गलवान् माङ्गल्योऽमङ्गलापहः ॥ ६८॥

मङ्गलाचारचरितः शीर्णः सर्वव्रतो व्रती ।
चतुर्मुखः पद्ममाली पूतात्मा प्रणतार्तिहा ॥ ६९॥

अकिञ्चनः सत्यसन्धो निर्गुणो गुणवान् गुणी ।
सम्पूर्णः पुण्डरीकाक्षो विधेयो योगतत्परः ॥ ७०॥

सहस्रांशुः क्रतुपतिः सर्वस्वं सुमतिः सुवाक् ।
सुभामनो माल्यदामा घृताहारो हरिप्रियः ॥ ७१॥

ब्रह्मप्रचेता प्रथितः प्रतीतात्मा स्थिरात्मकः ।
शतबिन्दुः शतमखो गरीयान् अनलप्रभुः ॥ ७२॥

धीरो महत्तरो धन्यः पुरुषः पुरुषोत्तमः ।
विद्याधराधिराजोऽहिविद्यावान् भूतिदस्थितः ॥७३॥

अनिर्देश्यवपुः श्रीमान् विश्वात्मा बहुमङ्गलः ।
सुस्थितः सुरथः स्वर्णो मोक्षाधारनिकेतनः ॥ ७४॥

निर्द्वन्द्वो द्वन्द्वहा सर्गः सर्वगः सम्प्रकाशयः ।
दयालुः सूक्ष्मरीः शान्तिः क्षेमाक्षेमस्थितिप्रियः ॥ ७५॥

भूतरो भूपतिर्वक्ता पवित्रात्मा त्रिलोचनः ।
महावराहः प्रियकृद् धाता भोक्ताभयप्रदः ॥ ७६॥

चतुर्वेदधरो नित्यो विनिद्रो विविधाशनः ।
चक्रवर्ती धृतिकरः सम्पूर्णोऽथ महेश्वरः ॥ ७७॥

विचित्ररथ एकाकी सप्तसप्तिः परात्परः ।
सर्वोदधिस्थितिकरः स्थितिस्थेयः स्थितिप्रियः ॥ ७८॥

निष्कलः पुष्करनिभो वसुमान् वासवप्रियः ।
वसुमान् वासवस्वामी वसुराता वसुप्रदः ॥ ७९॥

बलवान् ज्ञानवांस्तत्त्वम् ओंकारस् तृषुसंस्थितः ।
संकल्पयोनिर्दिनकृद् भगवान् कारणावहः ॥ ८०॥

नीलकण्ठो धनाध्यक्षश्चतुर्वेदप्रियंवदः ।
वषट्कारो हुतं होता स्वाहाकारो हुताहुतिः ॥ ८१॥

जनार्दनो जनानन्दो नरो नारायणोऽम्बुदः ।
स्वर्णाङ्गक्षपणो वायुः सुरा सुरनमस्कृतः ॥ ८२॥

विग्रहो विमलो बिन्दुर्विशोको विमलद्युतिः ।
द्योतितो द्योतनो विद्वान् विविद्वान् वरदो बली ॥ ८३॥

धर्मयोनिर्महामोहो विष्णुभ्राता सनातनः ।
सावित्रीभावितो राजा विसृतो विघृणी विराट् ॥ ८४॥

सप्तार्चिः सप्ततुरगः सप्तलोकनमस्कृतः ।
सम्पन्नोऽथ जगन्नाथः सुमनाः शोभनप्रियः ॥ ८५॥

सर्वात्मा सर्वकृत् सृष्टिः सप्तिमान् सप्तमीप्रियः ।
सुमेधा माधवो मेध्यो मेधावी मधुसूदनः ॥ ८६॥

अङ्गिरा गतिकालज्ञो धूमकेतुसुकेतनः ।
सुखी सुखप्रदः सौख्यं कामी कान्तिप्रियो मुनिः ॥ ८७॥

संतापनः संतपन आतपी तपसांपतिः ।
उग्रश्रवा सहस्रोस्रः प्रियङ्कारो प्रियङ्करः ॥ ८८॥

प्रीतो विमन्युरम्भोदो जीवनो जगतांपतिः ।
जगत्पिता प्रीतमनाः सर्वः शर्वो गुहावलः ॥ ८९॥

सर्वगो जगदानन्दो जगन्नेता सुरारिहा ।
श्रेयः श्रेयस्करो ज्यायानुत्तमोत्तम उत्तमः ॥ ९०॥

उत्तमोऽथ महामेरुर्धारणो धरणीधरः ।
धाराधरो धर्मराजो धर्माधर्मप्रवर्तकः ॥ ९१॥

रथाध्यक्षो रथपतिस् त्वरमाणोऽमितानलः ।
उत्तरोऽनुत्तरस् तापी तारापतिरपांपतिः ॥ ९२॥

पुण्यसंकीर्तनः पुण्यो हेतुर्लोकत्रयाश्रयः ।
स्वर्भानुर्विहगारिष्टो विशिष्टोत्कृष्टकर्मकृत् ॥ ९३॥

व्याधिप्रणाशनः क्षेमः शूरः सर्वजिताम्बरः ।

एकनाथो रथाधीशः शनैश्चरपितासितः ॥ ९४॥

वैवस्वतगुरुर्मृत्युर्धर्मनित्यो महाव्रतः ।
प्रलम्बहारः संचारी प्रद्योतो द्योतितोऽनलः ॥ ९५॥

संतानकृत् परो मन्त्रो मन्त्रमूर्तिर्महाबलः ।
श्रेष्ठात्मा सुप्रियः शम्भुर्महतामीश्वरेश्वरः ॥ ९६॥

संसारगतिविच्छेता संसारार्णवतारकः ।
सप्तजिह्वः सहस्रार्ची रत्नगर्भोऽपराजितः ॥ ९७॥

धर्मकेतुरमेयात्मा धर्माधर्मवरप्रदः ।
लोकसाक्षी लोकगुरुर्लोकेशश् छन्दवाहनः ॥ ९८॥

धर्मरूपः सूक्ष्मवायुर्धनुष्पाणिर्धनुर्धरः ।
पिनाकधृन् महोत्साहो नैकमायो महाशनः ॥ ९९॥

वीरः शक्तिमतांश्रेष्ठः सर्वशस्त्रभृतांवरः ।
ज्ञानगम्यो दुराराध्यो लोहिताङ्गोऽरिमर्दनः ॥ १००॥

अनन्तो धर्मदो नित्यो धर्मकृच्चित् त्रिविक्रमः ।
दैवत्रस् त्र्यक्षरो मध्यो नीलाङ्गो नीललोहितः ॥ १०१॥

एकोऽनेकस् त्रयीव्यासः सविता समितिञ्जयः ।
शार्ङ्गधन्वानलो भीमः सर्वप्रहरणायुधः ॥ १०२॥

परमेष्ठी परंज्योतिर्नाकपाली दिवस्पतिः ।
वदान्यो वासुकिर्वैद्य आत्रेयोऽतिपराक्रमः ॥ १०३॥

द्वापरः परमोदारः परमब्रह्मचर्यवान् ।
उद्दीप्तवेषो मुकुटी पद्महस्तोऽहिमांशुभृत् ॥ १०४॥

स्मितः प्रसन्नवदनः पद्मोदरनिभाननः ।
सायंदिवा दिव्यवपुरनिर्देश्यो महारथः ॥ १०५॥

महारथो महानीशः शेषः सत्त्वरजस्तमः ।
धृतातपत्रः प्रतिमो विमर्शी निर्णयस्थितः ॥ १०६॥

अहिंसकः शुद्धमतिरद्वितीयो विमर्दनः ।
सर्वदो धनदो मोक्षो विहारी बहुदायकः ॥ १०७॥

ग्रहनाथो ग्रहपतिर्ग्रहेशस् तिमिरापहः ।
मनोहरवपुः शुभ्रः शोभनः सुप्रभाननः ॥ १०८॥

सुप्रभः सुप्रभाकारः सुनेत्रो निक्षुभापतिः ।
राज्ञीप्रियः शब्दकरो ग्रहेशस् तिमिरापहः ॥ १०९॥

सैंहिकेयरिपुर्देवो वरदो वरनायकः ।
चतुर्भुजो महायोगी योगीश्वरपतिस् तथा ॥ ११०॥

अनादिरूपोऽदितिजो रत्नकान्तिः प्रभामयः ।
जगत्प्रदीपो विस्तीर्णो महाविस्तीर्णमण्डलः ॥ १११॥

एकचक्ररथः स्वर्णरथः स्वर्णशरीरधृक् ।
निरालम्बो गगनरो धर्मकर्मप्रभावकृत् ॥ ११२॥

धर्मात्मा कर्मणांसाक्षी प्रत्यक्षः परमेश्वरः ।
मेरुसेवी सुमेधावी मेरुरक्षाकरो महान् ॥ ११३॥

आधारभूको रतिमांस्तथा च धनधान्यकृत् ।
पापसंतापसंहर्ता मनोवांछितदायकः ॥ ११४॥

लोकहर्ता राज्यदायी रमणीयगुणोऽनृणी ।
कालत्रयानन्तरूपो मुनिवृन्दनमस्कृतः ॥ ११५॥

संध्यारागकरः सिद्धः संध्यावन्दनवन्दितः ।
साम्राज्यदाननिरतः समाराधनतोषवान् ॥ ११६॥

भक्तदुःखक्षयकरो भवसागरतारकः ।
भयापहर्ता भगवान् अप्रमेयपराक्रमः ।
मनुस्वामी मनुपतिर्मान्यो मन्वन्तराधिपः ॥ ११७॥

॥ फलश्रुतिः ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
नाम्नां सहस्रं सवितुः पाराशर्यो यदाह मे ॥ ११८॥

धन्यं यशस्यमायुष्यं दुष्टदुःस्वप्ननाशनम् ।
बन्धमोक्षकरं चैव भानोर्नामानुकीर्तनम् ॥ ११९॥

यस्त्विदं शृणुयान्नित्यं पठित्वा प्रयतो नरः ।
अक्षयं सुखमन्नाद्यं भवेत्तस्योपसाधितम् ॥ १२०॥

नृपाग्नितस्करभयं व्याधिभ्यो न भयं भवेत् ।
विजयी च भवेन्नित्यं श्रेयश्च परमाप्नुयात् ॥ १२१॥

कीर्तिमान्सुभगो विद्वान् स सुखी प्रियदर्शनः ।
भवेद्वर्षशतायुश्च सर्वव्याधिविवर्जितः ॥ १२२॥

नाम्नां सहस्रमिदमंशुमतः पठेद्यः
प्रातः शुचिर्नियमवान्सुसमृधियुक्तः । var समाधियुक्तः
दूरेण तं परिहरन्ति सदैव रोगा
भूताः सुपर्णमिव सर्वमहोरगेन्द्राः ॥ १२३॥

॥ इति श्री भविष्यपुराणे सप्तमकल्पे
श्रीभगवत्सूर्यसहस्रनामस्तोत्रं सम्पूर्णम् ॥

॥ श्रीसूर्यसहस्रनामस्तोत्रम् २ ॥
श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये

अथ चतुस्त्रिंशः पटलः ।

श्रीभैरव उवाच ।
देवदेवि महादेवि सर्वाभयवरप्रदे ।
त्वं मे प्राणप्रिया प्रीता वरदोऽहं तव स्थितः ॥ १॥

किञ्चित् प्रार्थय मे प्रेम्णा वक्ष्ये तत्ते ददाम्यहम् ।

श्रीदेव्युवाच ।
भगवन् देवदेवेश महारुद्र महेश्वर ॥ २॥

यदि देयो वरो मह्यं वरयोग्यास्म्यहं यदि ।
देवदेवस्य सवितुर्वद नामसहस्रकम् ॥ ३॥

श्रीभैरव उवाच ।
एतद्गुह्यतमं देवि सर्वस्वं मम पार्वति ।
रहस्यं सर्वदेवानां दुर्लभं कामनावहम् ॥ ४॥

यो देवो भगवान् सूर्यो वेदकर्ता प्रजापतिः ।
कर्मसाक्षी जगच्चक्षुः स्तोतुं तं केन शक्यते ॥ ५॥

यस्यादिर्मध्यमन्तं च सुरैरपि न गम्यते ।
तस्यादिदेवदेवस्य सवितुर्जगदीशितुः ॥ ६॥

मन्त्रनामसहस्रं ते वक्ष्ये साम्राज्यसिद्धिदम् ।
सर्वपापापहं देवि तन्त्रवेदागमोद्धृतम् ॥ ७॥

माङ्गल्यं पौष्टिकं चैव रक्षोघ्नं पावनं महत् ।
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ॥ ८॥

धनदं पुण्यदं पुण्यं श्रेयस्करं यशस्करम् ।
वक्ष्यामि परमं तत्त्वं मूलविद्यात्मकं परम् ॥ ९॥

ब्रह्मणो यत् परं ब्रह्म पराणामपि यत् परम् ।
मन्त्राणामपि यत् तत्त्वं महसामपि यन्महः ॥ १०॥

शान्तानामपि यः शान्तो मनूनामपि यो मनुः ।
योगिनामपि यो योगी वेदानां प्रणवश्च यः ॥ ११॥

ग्रहाणामपि यो भास्वान् देवानामपि वासवः ।
ताराणामपि यो राजा वायूनां च प्रभञ्जनः ॥ १२॥

इन्द्रियाणामपि मनो देवीनामपि यः परा ।
नगानामपि यो मेरुः पन्नगानां च वासुकिः ॥ १३॥

तेजसामपि यो वह्निः कारणानां च यः शिवः ।
सविता यस्तु गायत्र्याः परमात्मेति कीर्त्यते ॥ १४॥

वक्ष्ये परमहंसस्य तस्य नामसहस्रकम् ।
सर्वदारिद्र्यशमनं सर्वदुःखविनाशनम् ॥ १५॥

सर्वपापप्रशमनं सर्वतीर्थफलप्रदम् ।
ज्वररोगापमृत्युघ्नं सदा सर्वाभयप्रदम् ॥ १६॥

तत्त्वं परमतत्त्वं च सर्वसारोत्तमोत्तमम् ।
राजप्रसादविजय-लक्ष्मीविभवकारणम् ॥ १७॥

आयुष्करं पुष्टिकरं सर्वयज्ञफलप्रदम् ।
मोहनस्तम्भनाकृष्टि-वशीकरणकारणम् ॥ १८॥

अदातव्यमभक्ताय सर्वकामप्रपूरकम् ।
शृणुष्वावहिता भूत्वा सूर्यनामसहस्रकम् ॥ १९॥

अस्य श्रीसूर्यनामसहस्रस्य श्रीब्रह्मा ऋषिः । गायत्र्यं छन्दः ।
श्रीभगवान् सविता देवता । ह्रां बीजं । सः शक्तिः । ह्रीं कीलकं ।
धर्मार्थकाममोक्षार्थे सूर्यसहस्रनामपाठे विनियोगः ॥

ध्यानम् ॥

कल्पान्तानलकोटिभास्वरमुखं सिन्दूरधूलीजपा-
वर्णं रत्नकिरीटिनं द्विनयनं श्वेताब्जमध्यासनम् ।
नानाभूषणभूषितं स्मितमुखं रक्ताम्बरं चिन्मयं
सूर्यं स्वर्णसरोजरत्नकलशौ दोर्भ्यां दधानं भजे ॥ १॥

प्रत्यक्षदेवं विशदं सहस्रमरीचिभिः शोभितभूमिदेशम् ।
सप्ताश्वगं सद्ध्वजहस्तमाद्यं देवं भजेऽहं मिहिरं हृदब्जे ॥ २॥

ॐह्रांह्रींसःहंसःसोहं सविता भास्करो भगः ।
भगवान् सर्वलोकेशो भूतेशो भूतभावनः ॥ ३॥

भूतात्मा सृष्टिकृत् स्रष्टा कर्ता हर्ता जगत्पतिः ।
आदित्यो वरदो वीरो वीरलो विश्वदीपनः ॥ ४॥

विश्वकृद् विश्वहृद् भक्तो भोक्ता भीमोऽभयापहः ।
विश्वात्मा पुरुषः साक्षी परं ब्रह्म परात् परः ॥ ५॥

प्रतापवान् विश्वयोनिर्विश्वेशो विश्वतोमुखः ।
कामी योगी महाबुद्धिर्मनस्वी मनुरव्ययः ॥ ६॥

प्रजापतिर्विश्ववन्द्यो वन्दितो भुवनेश्वरः ।
भूतभव्यभविष्यात्मा तत्त्वात्मा ज्ञानवान् गुणी ॥ ७॥

सात्त्विको राजसस्तामस्तमवी करुणानिधिः ।
सहस्रकिरणो भास्वान् भार्गवो भृगुरीश्वरः ॥ ८॥

निर्गुणो निर्ममो नित्यो नित्यानन्दो निराश्रयः ।
तपस्वी कालकृत् कालः कमनीयतनुः कृशः ॥ ९॥

दुर्दर्शः सुदशो दाशो दीनबन्धुर्दयाकरः ।
द्विभुजोऽष्टभुजो धीरो दशबाहुर्दशातिगः ॥ १०॥

दशांशफलदो विष्णुर्जिगीषुर्जयवाञ्जयी ।
जटिलो निर्भयो भानुः पद्महस्तः कुशीरकः ॥ ११॥

समाहितगतिर्धाता विधाता कृतमङ्गलः ।
मार्तण्डो लोकधृत् त्राता रुद्रो भद्रप्रदः प्रभुः ॥ १२॥

अरातिशमनः शान्तः शङ्करः कमलासनः ।
अविचिन्त्यवपुः (१००) श्रेष्ठो महाचीनक्रमेश्वरः ॥ १३॥

महार्तिदमनो दान्तो महामोहहरो हरिः ।

नियतात्मा च कालेशो दिनेशो भक्तवत्सलः ॥ १४॥

कल्याणकारी कमठकर्कशः कामवल्लभः ।
व्योमचारी महान् सत्यः शम्भुरम्भोजवल्लभः ॥ १५॥

सामगः पञ्चमो द्रव्यो ध्रुवो दीनजनप्रियः ।
त्रिजटो रक्तवाहश्च रक्तवस्त्रो रतिप्रियः ॥ १६॥

कालयोगी महानादो निश्चलो दृश्यरूपधृक् ।
गम्भीरघोषो निर्घोषो घटहस्तो महोमयः ॥ १७॥

रक्ताम्बरधरो रक्तो रक्तमाल्यानुलेपनः ।
सहस्रहस्तो विजयो हरिगामी हरीश्वरः ॥ १८॥

मुण्डः कुण्डी भुजङ्गेशो रथी सुरथपूजितः ।
न्यग्रोधवासी न्यग्रोधो वृक्षकर्णः कुलन्धरः ॥ १९॥

शिखी चण्डी जटी ज्वाली ज्वालातेजोमयो विभुः ।
हैमो हेमकरो हारी हरिद्रलासनस्थितः ॥ २०॥

हरिद्श्वो जगद्वासी जगतां पतिरिङ्गिलः ।
विरोचनो विलासी च विरूपाक्षो विकर्तनः ॥ २१॥

विनायको विभासश्च भासो भासां पतिः प्रभुः ।
मतिमान् रतिमान् स्वक्षो विशालाक्षो विशाम्पतिः ॥ २२॥

बालरूपो गिरिचरो गीर्पतिर्गोमतीपतिः ।
गङ्गाधरो गणाध्यक्षो गणसेव्यो गणेश्वरः ॥ २३॥

गिरीशनयनावासी सर्ववासी सतीप्रियः ।
सत्यात्मकः सत्यधरः सत्यसन्धः सहस्रगुः ॥ २४॥

अपारमहिमा मुक्तो मुक्तिदो मोक्षकामदः ।
मूर्तिमान् ( २००) दुर्धरोऽमूर्तिस्तुटिरूपो लवात्मकः ॥ २५॥

प्राणेशो व्यानदोऽपानसमानोदानरूपवान् ।
चषको घटिकारूपो मुहूर्तो दिनरूपवान् ॥ २६॥

पक्षो मास ऋतुर्वर्षा दिनकालेश्वरेश्वरः ।
अयनं युगरूपश्च कृतं त्रेतायुगस्त्रिपात् ॥ २७॥

द्वापरश्च कलिः कालः कालात्मा कलिनाशनः ।
मन्वन्तरात्मको देवः शक्रस्त्रिभुवनेश्वरः ॥ २८॥

वासवोऽग्निर्यमो रक्षो वरुणो यादसां पतिः ।
वायुर्वैश्रवणं शैव्यो गिरिजो जलजासनः ॥ २३॥

अनन्तोऽनन्तमहिमा परमेष्ठी गतज्वरः ।
कल्पान्तकलनः क्रूरः कालाग्निः कालसूदनः ॥ ३०॥

महाप्रलयकृत् कृत्यः कुत्याशीर्युगवर्तनः ।
कालावर्तो युगधरो युगादिः शहकेश्वरः ॥ ३१॥

आकाशनिधिरूपश्च सर्वकालप्रवर्तकः ।
अचिन्त्यः सुबलो बालो बलाकावल्लभो वरः ॥ ३२॥

वरदो वीर्यदो वाग्मी वाक्पतिर्वाग्विलासदः ।
साङ्ख्येश्वरो वेदगम्यो मन्त्रेशस्तन्त्रनायकः ॥ ३३॥

कुलाचारपरो नुत्यो नुतितुष्टो नुतिप्रियः ।
अलसस्तुलसीसेव्यस्तुष्टा रोगनिवर्हणः ॥ ३४॥

प्रस्कन्दनो विभागश्च नीरागो दशदिक्पतिः ।
वैराग्यदो विमानस्थो रत्नकुम्भधरायुधः ॥ ३५॥

महापादो महाहस्तो महाकायो महाशयः ।
ऋग्यजुःसामरूपश्च त्वष्टाथर्वणशाखिलः ॥ ३६॥

सहस्रशाखी सद्वृक्षो महाकल्पप्रियः पुमान् ।
कल्पवृक्षश्च मन्दारो ( ३००) मन्दाराचलशोभनः ॥ ३७॥

मेरुर्हिमालयो माली मलयो मलयद्रुमः ।
सन्तानकुसुमच्छन्नः सन्तानफलदो विराट् ॥ ३८॥

क्षीराम्भोधिर्घृताम्भोधिर्जलधिः क्लेशनाशनः ।
रत्नाकरो महामान्यो वैण्यो वेणुधरो वणिक् ॥ ३९॥

वसन्तो मारसामन्तो ग्रीष्मः कल्मषनाशनः ।
वर्षाकालो वर्षपतिः शरदम्भोजवल्लभः ॥ ४०॥

हेमन्तो हेमकेयूरः शिशिरः शिशुवीर्यदः ।
सुमतिः सुगतिः साधुर्विष्णुः साम्बोऽम्बिकासुतः ॥ ४१॥

सारग्रीवो महाराजः सुनन्दो नन्दिसेवितः ।
सुमेरुशिखरावासी सप्तपातालगोचरः ॥ ४२॥

आकाशचारी नित्यात्मा विभुत्वविजयप्रदः ।
कुलकान्तः कुलाद्रीशो विनयी विजयी वियत् ॥ ४३॥

विश्वम्भरा वियच्चारी वियद्रूपो वियद्रथः ।
सुरथः सुगतस्तुत्यो वेणुवादनतत्परः ॥ ४४॥

गोपालो गोमयो गोप्ता प्रतिष्ठायी प्रजापतिः ।
आवेदनीयो वेदाक्षो महादिव्यवपुः सुराट् ॥ ४५॥

निर्जीवो जीवनो मन्त्री महार्णवनिनादभृत् ।
वसुरावर्तनो नित्यः सर्वाम्नायप्रभुः सुधीः ॥ ४६॥

न्यायनिर्वापणः शूली कपाली पद्ममध्यगः ।
त्रिकोणनिलयश्चेत्यो बिन्दुमण्डलमध्यगः ॥ ४७॥

बहुमालो महामालो दिव्यमालाधरो जपः ।
जपाकुसुमसङ्काशो जपपूजाफलप्रदः ॥ ४८॥

सहस्रमूर्धा देवेन्द्रः सहस्रनयनो रविः ।
सर्वतत्त्वाश्रयो ब्रध्नो वीरवन्द्यो विभावसुः ॥ ४९॥

विश्वावसुर्वसुपतिर्वसुनाथो विसर्गवान् ।
आदिरादित्यलोकेशः सर्वगामी (४००) कलाश्रयः ॥ ५०॥

भोगेशो देवदेवेन्द्रो नरेन्द्रो हव्यवाहनः ।
विद्याधरेशो विद्येशो यक्षेशो रक्षणो गुरुः ॥ ५१॥

रक्षःकुलैकवरदो गन्धर्वकुलपूजितः ।

अप्सरोवन्दितोऽजय्यो जेता दैत्यनिवर्हणः ॥ ५२॥

गुह्यकेशः पिशाचेशः किन्नरीपूजितः कुजः ।
सिद्धसेव्यः समाम्नायः साधुसेव्यः सरित्पतिः ॥ ५३॥

ललाटाक्षो विश्वदेहो नियमी नियतेन्द्रियः ।
अर्कोऽर्ककान्तरत्रेशोऽनन्तबाहुरलोपकः ॥ ५४॥

अलिपात्रधरोऽनङ्गोऽप्यम्बरेशोऽम्बराश्रयः ।
अकारमातृकानाथो देवानामादिराकृतिः ॥ ५५॥

आरोग्यकारी चानन्दविग्रहो निग्रहो ग्रहः ।
आलोककृत् तथादित्यो वीरादित्यः प्रजाधिपः ॥ ५६॥

आकाशरूपः स्वाकार इन्द्रादिसुरपूजितः ।
इन्दिरापूजितश्चेन्दुरिन्द्रलोकाश्रयस्त्विनः ॥ ५७॥

ईशान ईश्वरश्चन्द्र ईश ईकारवल्लभः ।
उन्नतास्योऽप्युरुवपुरुन्नताद्रिचरो गुरुः ॥ ५८॥

उत्पलोऽप्युच्चलत्केतुरुच्चैर्हयगतिः सुखी ।
उकाराकारसुखितस्तथोष्मा निधिरूषणः ॥ ५९॥

अनूरुसारथिश्चोष्णभानुरूकारवल्लभः ।
ऋणहर्ता ॠलिहस्त ऋॠभूषणभूषितः ॥ ६०॥

लृप्ताङ्ग ॡमनुस्थायी लृॡगण्डयुगोज्ज्वलः ।
एणाङ्कामृतदश्चीनपट्टभृद् बहुगोचरः ॥ ६१॥

एकचक्रधरश्चैकोऽनेकचक्षुस्तथैक्यदः ।
एकारबीजरमण एऐओष्ठामृताकरः ॥ ६२॥

ओङ्कारकारणं ब्रह्म औकारौचित्यमण्डनः ।
ओऔदन्तालिरहितो महितो महतां पतिः ॥ ६३॥

अंविद्याभूषणो भूष्यो लक्ष्मीशोऽम्बीजरूपवान् ।
अःस्वरूपः (५००) स्वरमयः सर्वस्वरपरात्मकः ॥ ६४॥

अंअःस्वरूपमन्त्राङ्गः कलिकालनिवर्तकः ।
कर्मैकवरदः कर्मसाक्षी कल्मषनाशनः ॥ ६५॥

कचध्वंसी च कपिलः कनकाचलचारकः ।
कान्तः कामः कपिः क्रूरः कीरः केशनिसूदनः ॥ ६६॥

कृष्णः कापालिकः कुब्जः कमलाश्रयणः कुली ।
कपालमोचकः काशः काश्मीरघनसारभृत् ॥ ६७॥

कूजत्किन्नरगीतेष्टः कुरुराजः कुलन्धरः ।
कुवासी कुलकौलेशः ककाराक्षरमण्डनः ॥ ६८॥

खवासी खेटकेशानः खड्गमुण्डधरः खगः ।
खगेश्वरश्च खचरः खेचरीगणसेवितः ॥ ६९॥

खरांशुः खेटकधरः खलहर्ता खवर्णकः ।
गन्ता गीतप्रियो गेयो गयावासी गणाश्रयः ॥ ७०॥

गुणातीतो गोलगतिर्गुच्छलो गुणिसेवितः ।
गदाधरो गदहरो गाङ्गेयवरदः प्रगी ॥ ७१॥

गिङ्गिलो गटिलो गान्तो गकाराक्षरभास्करः
घृणिमान् घुर्घुरारावो घण्टाहस्तो घटाकरः ॥ ७२॥

घनच्छन्नो घनगतिर्घनवाहनतर्पितः ।
ङान्तो ङेशो ङकाराङ्गश्चन्द्रकुङ्कुमवासितः ॥ ७३॥

चन्द्राश्रयश्चन्द्रधरोऽच्युतश्चम्पकसन्निभः ।
चामीकरप्रभश्चण्डभानुश्चण्डेशवल्लभः ॥ ७४॥

चञ्चच्चकोरकोकेष्टश्चपलश्चपलाश्रयः ।
चलत्पताकश्चण्डाद्रिश्चीवरैकधरोऽचरः ॥ ७५॥

चित्कलावर्धितश्चिन्त्यश्चिन्ताध्वंसी चवर्णवान् ।
छत्रभृच्छलहृच्छन्दच्छुरिकाच्छिन्नविग्रहः ॥ ७६॥

जाम्बूनदाङ्गदोऽजातो जिनेन्द्रो जम्बुवल्लभः ।
जम्वारिर्जङ्गिटो जङ्गी जनलोकतमोपहः ॥ ७७॥

जयकारी (६००) जगद्धर्ता जरामृत्युविनाशनः ।
जगत्त्राता जगद्धाता जगद्ध्येयो जगन्निधिः ॥ ७८॥

जगत्साक्षी जगच्चक्षुर्जगन्नाथप्रियोऽजितः ।
जकाराकारमुकुटो झञ्जाछन्नाकृतिर्झटः ॥ ७९॥

झिल्लीश्वरो झकारेशो झञ्जाङ्गुलिकराम्बुजः ।
ञत्राक्षराञ्चितष्टङ्कष्टिट्टिभासनसंस्थितः ॥ ८०॥

टीत्कारष्टङ्कधारी च ठःस्वरूपष्ठठाधिपः ।
डम्भरो डामरुर्डिण्डी डामरीशो डलाकृतिः ॥ ८१॥

डाकिनीसेवितो डाढी डढगुल्फाङ्गुलिप्रभः ।
णेशप्रियो णवर्णेशो णकारपदपङ्कजः ॥ ८२॥

ताराधिपेश्वरस्तथ्यस्तन्त्रीवादनतत्परः ।
त्रिपुरेशस्त्रिनेत्रेशस्त्रयीतनुरधोक्षजः ॥ ८३॥

तामस्तामरसेष्टश्च तमोहर्ता तमोरिपुः ।
तन्द्राहर्ता तमोरूपस्तपसां फलदायकः ॥ ८४॥

तुट्यादिकलनाकान्तस्तकाराक्षरभूषणः ।
स्थाणुस्थलीस्थितो नित्यं स्थविरः स्थण्डिल स्थुलः ॥ ८५॥

थकारजानुरध्यात्मा देवनायकनायकः ।
दुर्जयो दुःखहा दाता दारिद्र्यच्छेदनो दमी ॥ ८६॥

दौर्भाग्यहर्ता देवेन्द्रो द्वादशाराब्जमध्यगः ।
द्वादशान्तैकवसतिर्द्वादशात्मा दिवस्पतिः ॥ ८७॥

दुर्गमो दैत्यशमनो दूरगो दुरतिक्रमः ।
दुर्ध्येयो दुष्टवंशघ्नो दयानाथो दयाकुलः ॥ ८८॥

दामोदरो दीधितिमान् दकाराक्षरमातृकः ।
धर्मबन्धुर्धर्मनिधिर्धर्मराजो धनप्रदः ॥ ८९॥

धनदेष्टो धनाध्यक्षो धरादर्शो धुरन्धरः ।

धूर्जटीक्षणवासी च धर्मक्षेत्रो धराधिपः ॥ ९०॥

धाराधरो धुरीणश्च धर्मात्मा धर्मवत्सलः ।
धराभृद्वल्लभो धर्मी धकाराक्षरभूषणः ॥ ९१॥

नमप्रियो नन्दिरुद्रो ( ७००) नेता नीतिप्रियो नयी ।
नलिनीवल्लभो नुन्नो नाट्यकृन्नाट्यवर्धनः ॥ ९२॥

नरनाथो नृपस्तुत्यो नभोगामी नमःप्रियः ।
नमोन्तो नमितारातिर्नरनारायणाश्रयः ॥ ९३॥

नारायणो नीलरुचिर्नम्राङ्गो नीललोहितः ।
नादरूपो नादमयो नादबिन्दुस्वरूपकः ॥ ९४॥

नाथो नागपतिर्नागो नगराजाश्रितो नगः ।
नाकस्थितोऽनेकवपुर्नकाराक्षरमातृकः ॥ ९५॥

पद्माश्रयः परं ज्योतिः पीवरांसः पुटेश्वरः ।
प्रीतिप्रियः प्रेमकरः प्रणतार्तिभयापहः ॥ ९६॥

परत्राता परध्वंसी पुरारिः पुरसंस्थितः ।
पूर्णानन्दमयः पूर्णतेजाः पूर्णेश्वरीश्वरः ॥ ९७॥

पटोलवर्णः पटिमा पाटलेशः परात्मवान् ।
परमेशवपुः प्रांशुः प्रमत्तः प्रणतेष्टदः ॥ ९८॥

अपारपारदः पीनः पीताम्बरप्रियः पविः ।
पाचनः पिचुलः प्लुष्टः प्रमदाजनसौख्यदः ॥ ९९॥

प्रमोदी प्रतिपक्षघ्नः पकाराक्षरमातृकः ।
फलं भोगापवर्गस्य फलिनीशः फलात्मकः ॥ १००॥

फुल्लदम्भोजमध्यस्थः फुल्लदम्भोजधारकः ।
स्फुटद्योतिः स्फुटाकारः स्फटिकाचलचारकः ॥ १०२॥

स्फूर्जत्किरणमाली च फकाराक्षरपार्श्वकः ।
बालो बलप्रियो बान्तो बिलध्वान्तहरो बली ॥ १०३॥

बालादिर्बर्बरध्वंसी बबोलामृतपानकः ।
बुधो बृहस्पतिर्वृक्षो बृहदश्वो बृहद्गतिः ॥ १०४॥

बपृष्ठो भीमरूपश्च भामयो भेश्वरप्रियः ।
भगो भृगुर्भृगुस्थायी भार्गवः कविशेखरः ॥ १०५॥

भाग्यदो भानुदीप्ताङ्गो भनाभिश्च भमातृकः ।
महाकालो (८००) महाध्यक्षो महानादो महामतिः ॥ १०६॥

महोज्ज्वलो मनोहारी मनोगामी मनोभवः ।
मानदो मल्लहा मल्लो मेरुमन्दरमन्दिरः ॥ १०७॥

मन्दारमालाभरणो माननीयो मनोमयः ।
मोदितो मदिराहारो मार्तण्डो मुण्डमुण्डितः ॥ १०८॥

महावराहो मीनेशो मेषगो मिथुनेष्टदः ।
मदालसोऽमरस्तुत्यो मुरारिवरदो मनुः ॥ १०९॥

माधवो मेदिनीशश्च मधुकैटभनाशनः ।
माल्यवान् मेधनो मारो मेधावी मुसलायुधः ॥ ११०॥

मुकुन्दो मुररीशानो मरालफलदो मदः ।
मदनो मोदकाहारो मकाराक्षरमातृकः ॥ १११॥

यज्वा यज्ञेश्वरो यान्तो योगिनां हृदयस्थितः ।
यात्रिको यज्ञफलदो यायी यामलनायकः ॥ ११२॥

योगनिद्राप्रियो योगकारणं योगिवत्सलः ।
यष्टिधारी च यन्त्रेशो योनिमण्डलमध्यगः ॥ ११३॥

युयुत्सुजयदो योद्धा युगधर्मानुवर्तकः ।
योगिनीचक्रमध्यस्थो युगलेश्वरपूजितः ॥ ११४॥

यान्तो यक्षैकतिलको यकाराक्षरभूषणः ।
रामो रमणशीलश्च रत्नभानू रुरुप्रियः ॥ ११५॥

रत्नमौली रत्नतुङ्गो रत्नपीठान्तरस्थितः ।
रत्नांशुमाली रत्नाढ्यो रत्नकङ्कणनूपुरः ॥ ११६॥

रत्नाङ्गदलसद्बाहू रत्नपादुकमण्डितः ।
रोहिणीशाश्रयो रक्षाकरो रात्रिञ्चरान्तकः ॥ ११७॥

रकाराक्षररूपश्च लज्जाबीजाश्रितो लवः ।
लक्ष्मीभानुर्लतावासी लसत्कान्तिश्च लोकभृत् ॥ ११८॥

लोकान्तकहरो लामावल्लभो लोमशोऽलिगः ।
लिङ्गेश्वरो लिङ्गनादो लीलाकारी ललम्बुसः ॥ ११९॥

लक्ष्मीवाँल्लोकविध्वंसी लकाराक्षरभूषणः ।
वामनो वीरवीरेन्द्रो वाचालो (९००) वाक्पतिप्रियः ॥ १२०॥

वाचामगोचरो वान्तो वीणावेणुधरो वनम् ।
वाग्भवो वालिशध्वंसी विद्यानायकनायकः ॥ १२१॥

वकारमातृकामौलिः शाम्भवेष्टप्रदः शुकः ।
शशी शोभाकरः शान्तः शान्तिकृच्छमनप्रियः ॥ १२२॥

शुभङ्करः शुक्लवस्त्रः श्रीपतिः श्रीयुतः श्रुतः ।
श्रुतिगम्यः शरद्बीजमण्डितः शिष्टसेवितः ॥ १२३॥

शिष्टाचारः शुभाचारः शेषः शेवालताडनः ।
शिपिविष्टः शिबिः शुक्रसेव्यः शाक्षरमातृकः ॥ १२४॥

षडाननः षट्करकः षोडशस्वरभूषितः ।
षट्पदस्वनसन्तोषी षडाम्नायप्रवर्तकः ॥ १२५॥

षड्सास्वादसन्तुष्टः षकाराक्षरमातृकः ।
सूर्यभानुः सूरभानुः सूरिभानुः सुखाकरः ॥ १२६॥

समस्तदैत्यवंशघ्नः समस्तसुरसेवितः ।
समस्तसाधकेशानः समस्तकुलशेखरः ॥ १२७॥

सुरसूर्यः सुधासूर्यः स्वःसूर्यः साक्षरेश्वरः ।
हरित्सूर्यो हरिद्भानुर्हविर्भुग् हव्यवाहनः ॥ १२८॥

हालासूर्यो होमसूर्यो हुतसूर्यो हरीश्वरः ।

ह्राम्बीजसूर्यो ह्रींसूर्यो हकाराक्षरमातृकः ॥ १२९॥

ळम्बीजमण्डितः सूर्यः क्षोणीसूर्यः क्षमापतिः ।
क्षुत्सूर्यः क्षान्तसूर्यश्च ळङ्क्षःसूर्यः सदाशिवः ॥ १३०॥

अकारसूर्यः क्षःसूर्यः सर्वसूर्यः कृपानिधिः ।
भूःसूर्यश्च भुवःसूर्यः स्वःसूर्यः सूर्यनायकः ॥ १३१॥

ग्रहसूर्य ऋक्षसूर्यो लग्नसूर्यो महेश्वरः ।
राशिसूर्यो योगसूर्यो मन्त्रसूर्यो मनूत्तमः ॥ १३२॥

तत्त्वसूर्यः परासूर्यो विष्णुसूर्यः प्रतापवान् ।
रुद्रसूर्यो ब्रह्मसूर्यो वीरसूर्यो वरोत्तमः ॥ १३३॥

धर्मसूर्यः कर्मसूर्यो विश्वसूर्यो विनायकः । (१०००)
इतीदं देवदेवेशि मत्रनामसहस्रकम् ॥ १३४॥

देवदेवस्य सवितुः सूर्यस्यामिततेजसः ।
सर्वसारमयं दिव्यं ब्रह्मतेजोविवर्धनम् ॥ १३५॥

ब्रह्मज्ञानमयं पुण्यं पुण्यतीर्थफलप्रदम् ।
सर्वयज्ञफलैस्तुल्यं सर्वसारस्वतप्रदम् ॥ १३६॥

सर्वश्रेयस्करं लोके कीर्तिदं धनदं परम् ।
सर्वव्रतफलोद्रिक्तं सर्वधर्मफलप्रदम् ॥ १३७॥

सर्वरोगहरं देवि शरीरारोग्यवर्धनम् ।
प्रभावमस्य देवेशि नाम्नां सहस्रकस्य च ॥ १३८॥

कल्पकोटिशतैर्वर्षैर्नैव शक्नोमि वर्णितुम् ।
यं यं काममभिध्यायेद् देवानामपि दुर्लभम् ॥ १३९॥

तं तं प्राप्नोति सहसा पठनेनास्य पार्वति ।
यः पठेच्छ्रावयेद्वापि शृणोति नियतेन्द्रियः ॥ १४०॥

स वीरो धर्मिणां राजा लक्ष्मीवानपि जायते ।
धनवाञ्जायते लोके पुत्रवान् राजवल्लभः ॥ १४१॥

आयुरारोग्यवान् नित्यं स भवेत् सम्पदां पदम् ।
रवौ पठेन्महादेवि सूर्यं सम्पूज्य कौलिकः ॥ १४२॥

सूर्योदये रविं ध्याता लभेत् कामान् यथेप्सितान् ।
सङ्क्रान्तौ यः पठेद् देवि त्रिकालं भक्तिपूर्वकम् ॥ १४३॥

इह लोके श्रियं भुक्त्वा सर्वरोगैः प्रमुच्यते ।
सप्तम्यां शुक्लपक्षे यः पठदस्तङ्गते रवौ ॥ १४४॥

सर्वारोग्यमयं देहं धारयेत् कौलिकोत्तमः ।
व्यतीपाते पठेद् देवि मध्याह्ने संयतेन्द्रियः ॥ १४५॥

धनं पुत्रान् यशो मानं लभेत् सूर्यप्रसादतः ।
चक्रार्चने पठेद् देवि जपन् मूलं रविं स्मरन् ॥ १४६॥

रवीभूत्वा महाचीनक्रमाचारविचक्षणः ।
सर्वशत्रून् विजित्याशु लभेल्लक्ष्मीं प्रतापवान् ॥ १४७॥

यः पठेत् परदेशस्थो वटुकार्चनतत्परः ।
कान्ताश्रितो वीतभयो भवेत् स शिवसन्निभः ॥ १४८॥

शतावर्तं पठेद्यस्तु सूर्योदययुगान्तरे ।
सविता सर्वलोकेशो वरदः सहसा भवेत् ॥ १४९॥

बहुनात्र किमुक्तेन पठनादस्य पार्वति ।
इह लक्ष्मीं सदा भुक्त्वा परत्राप्नोति तत्पदम् ॥ १५०॥

रवौ देवि लिखेद्भूर्जे मन्त्रनामसहस्रकम् ।
अष्टगन्धेन दिव्येन नीलपुष्पहरिद्रया ॥ १५१॥

पञ्चामृतौषधीभिश्च नृयुक्पीयूषबिन्दुभिः ।
विलिख्य विधिवन्मन्त्री यन्त्रमध्येऽर्णवेष्टितम् ॥ १५२॥

गुटीं विधाय संवेष्ट्य मूलमन्त्रमनुस्मरन् ।
कन्याकर्तितसूत्रेण वेष्टयेद्रक्तलाक्षया ॥ १५३॥

सुवर्णेन च संवेष्ट्य पञ्चगव्येन शोधयेत् ।
साधयेन्मन्त्रराजेन धारयेन्मूर्ध्नि वा भुजे ॥ १५४॥

किं किं न साधयेद् देवि यन्ममापि सुदुर्लभम् ।
कुष्ठरोगी च शूली च प्रमेही कुक्षिरोगवान् ॥ १५५॥

भगन्धरातुरोऽप्यर्शी अश्मरीवांश्च कृच्छ्रवान् ।
मुच्यते सहसा धृत्वा गुटीमेतां सुदुर्लभाम् ॥ १५६॥

वन्ध्या च काकवन्ध्या च मृतवत्सा च कामिनी ।
धारयेद्गुटिकामेतां वक्षसि स्मयतर्पिता ॥ १५७॥

वन्ध्या लभेत् सुतं कान्तं काकवन्ध्यापि पार्वति ।
मृतवत्सा बहून् पुत्रान् सुरूपांश्च चिरायुशः ॥ १५८ ॥

रणे गत्वा गुटीं धृत्वा शत्रूञ्जित्वा लभेच्छ्रियम् ।
अक्षताङ्गो महाराजः सुखी स्वपुरमाविशेत् ॥ १५९॥

यो धारयेद् भुजे नित्यं राजलोकवशङ्करीम् ।
गुटिकां मोहनाकर्षस्तम्भनोच्चाटनक्षमाम् ॥ १५०॥

स भवेत् सूर्यसङ्काशो महसा महसां निधिः ।
धनेन धनदो देवि विभवेन च शङ्करः ॥ १६१॥

श्रियेन्द्रो यशसा रामः पौरुषेण च भार्गवः ।
गिरा बृहस्पतिर्देवि नयेन भृगुनन्दनः ॥ १६२॥

बलेन वायुसङ्काशो दयया पुरुषोत्तमः ।
आरोग्येण घटोद्भूतिः कान्त्या पूर्णेन्दुसन्निभः ॥ १६३॥

धर्मेण धर्मराजश्च रत्नै रत्नाकरोपमः ।
गाम्भीर्येण तथाम्भोधिर्दातृत्वेन बलिः स्वयम् ॥ १६४॥

सिद्ध्या श्रीभैरवः साक्षादानन्देन चिदीश्वरः ।
किं प्रलापेन बहुना पठेद्वा धारयेच्छिवे ॥ १६५॥

शृणुयाद् यः परं दिव्यं सूर्यनामसहस्रकम् ।
स भवेद् भास्करः साक्षात् परमानन्दविग्रहः ॥ १६६॥

स्वतन्त्रः स प्रयात्यन्ते तद्विष्णोः परमं पदम् ।

इदं दिव्यं महत् तत्त्वं सूर्यनामसहस्रकम् ॥ १६७॥

अप्रकाश्यमदातव्यमवक्तव्यं दुरात्मने ।
अभक्ताय कुचैलाय परशिष्याय पार्वति ॥ १६८॥

कर्कशायाकुलीनाय दुर्जनायाघबुद्धये ।
गुरुभक्तिविहीनाय निन्दकाय शिवागमे ॥ १६९॥

देयं शिष्याय शान्ताय गुरुभक्तिपराय च ।
कुलीनाय सुभक्ताय सूर्यभक्तिरताय च ॥ १७०॥

इदं तत्त्वं हि तत्त्वानां वेदागमरहस्यकम् ।
सर्वमन्त्रमयं गोप्यं गोपनीयं स्वयोनिवत् ॥ १७१॥

॥ इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये
सूर्यसहस्रनामस्तोत्रनामनिरूपणं चतुस्त्रिंशः पटलः सम्पूर्णः ॥ ३४॥